# *अश्विनी देवता स्तोत्रम्*

प्रपूर्वगौ पूर्वजौ चित्रभानु गिरि
वाशं सामि तपसाह्वनं तौ ।
दिव्यौ सुपर्णौ विरजौ विमानौ
अधिक्षिपन्तौ भुवनानि विश्वाः ॥ 1 ॥

हिरण्मयौ शकुनी सांपरायौ
ना सत्य दस्रौ सुनसौ वैजयन्तौ ।
शुक्रं वयन्तौ तरसा सु वेम्ना
वधि व्यतंतौ वसितं विवश्वतः ॥ 2 ॥

ग्रस्तां सुपर्णस्य बलेन वर्तिकां
अमुंचता मस्विनौ सौभगाय ।
तावत्सु वृतौ अनमंत मायया
वासत्त मागा अरुणा उदा वहन् ॥ 3 ॥

षष्टिष्च गावः त्रिशतश्च धेनवः
एकं वत्सं सुवतीतं दुहन्ति ।
नाना गोष्ठा विहिता एक दोहना
तावस्विनौ दुहतौ घर्म मुक्त्यम् ॥ 4 ॥

एकां नाभिं सप्तशता अराः श्रिताः
प्रधिघ अन्या विंशतिरर्पिता अराः ।
अनेमि चक्रं परिवर्तते अजरं
मायास्विनौ समसक्ति चर्षणी ॥ 5 ॥

एकं चक्रं वर्तते द्वादशारं
षण्णाभि एकाक्ष अमृतस्य धारम् ।
अस्मिन् देवा अधि विश्वे विषक्तासा
वस्विनौ मुन्चतो मा विषीदतम् ॥ 6 ॥

अश्विना विंदुममृतं वृत्तभूयो
तिरोधत्तामस्विनौ दा सपत्नी ।
हित्वा गिरिमस्विनौ गा मुदा चरं तौ
वृत्तभूयो मह्ना प्रस्थितौ बलस्य ॥ 7 ॥

युवां दिशो जन यधोदशाग्रे
समानं मूर्ध्नि रथयानं वियन्ति ।
तासां यात मृषयोनु प्रयांति
देवा मनुष्याः क्षिति मा चरंति ॥ 8 ॥

युवां वर्णान् विकुरधो विश्वरूपान्
तेधि क्षिपंते भुवनानि विश्वा ।
ते भावनोप्यनु सृताश्चरन्ति
देवा मनुष्याः क्षिति मा चरंति ॥ 9 ॥

तौ ना सत्या वश्विनौ महेम
स्रजं चया बिबृधः पुष्करस्य ।
तौ ना सत्या वमृता वृधा वृते
देवा स्तत्प्र पदेन सूते ॥ 10 ॥

मुखेन गर्भं लभतां युवा नौ
गता सुरे तत् प्रपदेन सूते
सद्योजातो मातर मत्ति गर्भः
तावस्विनौ मुंचधो जीवसेगा ॥ 11 ॥

स्तोतुं नशक्नोमि गुणैर्भवंतौ
चक्षर्विहीनः पथि संप्र मोहः ।
दुर्गे हमस्मिन् पतितोस्मिकूपे
युवां शरण्यौ शरणं प्रपद्ये ॥ 12 ॥